*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942


**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा रोहन प्रज्ञा प्रिंटिग एवं पैकिंग प्रा.लि., एच-76, साइट-V, यू.पी.एस. आई.डी.सी., कासना, ग्रेटर नोएडा, जी.बी. नगर (उ.प्र.) द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-794-8

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः - 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

| | | | |
|---|---|---|---|
| अध्यक्ष, प्रकाशन प्रभाग | : *अनूप कुमार राजपूत* | मुख्य उत्पादन अधिकारी | : *अरुण चितकारा* |
| मुख्य संपादक | : *श्वेता उप्पल* | मुख्य व्यापार प्रबंधक | : *विपिन दिवान* |

# भुट्टाकम्



मदनः



जमालः



पितुः मित्रम्



मित्रस्य पत्नी



एकदा जमालः मदनः च गृहे एकाकिनौ आस्ताम्।
गृहस्य सर्वे जनाः विपणिम् अगच्छन्।
जमालः मदनः च गृह-गृह-क्रीडां क्रीडतः स्म।
जमालः माता अभवत् मदनः च पिता।



तदा एव गृहस्य घण्टिका–रवः जातः।
मदनः द्वारम् उद्घाटितवान्।
पितरं मातरं च द्रष्टुं कोऽपि आगतवान् आसीत्।
मदनः तौ अन्तः उपावेशयत्।




जमालः ताभ्यां जलं दत्तवान्।
सः जमालस्य पितुः मित्रम् आसीत्।
तेन सह तस्य पत्नी अपि आसीत्।
तौ जमालं पित्रोः विषये अपृच्छताम्।



जमालः सूचितवान् यत् सर्वे विपणिं गताः।
मदनः अवदत् यत् पिता शाकम् आनीय शीघ्रम् एव प्रत्यागमिष्यति।
पितुः मित्रं तस्य पत्नी च प्रतीक्षाम् अकुरुताम्।
तौ पादौ प्रसार्य सुखेन उपविष्टवन्तौ।





जमालः मदनः च पाकशालाम् आगच्छताम्।
जमालः चायं निर्मातुं प्रारभत।
मदनः खादितुं किमपि अन्वेष्टुम् आरब्धवान्।
मदनः सम्पुटकेषु किमपि न प्राप्तवान्।





मदनस्य दृष्टिः कण्डोले स्थापितेषु भुट्टाकेषु पतिता।
सः चत्वारि भुट्टाकानि गृहीतवान्।
मदनः अचिन्तयत् यत् भुट्टाकानां भर्जनं करणीयम्।
जमालः चायनिर्माणे एव संलग्नः आसीत्।





मदनः भुट्टाकानाम् आवरणम् अपाकर्तुम् आरब्धवान्।
सः भुट्टाकानाम् आवरणं तन्तून् च अपाकृतवान्।
जमालः चषके चायं विशोधितवान्।
सः मदनस्य हस्ते भुट्टाकानि दृष्टवान्।



जमालः अपृच्छत् यत् भुट्टाकैः किं करिष्यसि?

मदनः अवदत् यत् सः भुट्टाकानां भर्जनाय गच्छति।

जमालः तस्मात् भुट्टाकानि बलात् गृहीतवान्।

सः अकथयत् यत् भुट्टाकानि क्वथितानि कृत्वा खादिष्यावः।







जमाल–मदनयोः मध्ये भुट्टाक–निमित्तं कलहः जातः।
मदनः भुट्टाकानि भर्जितुम् इच्छति स्म।
जमालः भुट्टाकानि क्वथितुम् इच्छति स्म।
निर्मितं चायम् एकत्र स्थापितम् आसीत्।



मदनः जमालाय द्वे भुट्टाके दत्तवान्।
स: जमालं कथितवान् – "यत् इच्छसि तत् कुरु।"
जमालः भुट्टाकयोः द्वौ द्वौ खण्डौ कृतवान्।
स: भुट्टाकानि क्वथितुम् आरब्धवान्।





मदनः चायं दातुं बहिः निर्गतः।
जमालः भाण्डे जलं पूरितवान्।
सः भुट्टाक-खण्डान् भाण्डे क्षिप्तवान्।
भाण्डं चुल्लिकायां स्थापितवान्।





मदनः पाकशालां प्रत्यागतवान्।
भुट्टाकं भर्जितुम् आरब्धवान्।
जमालः क्वथन्ति भुट्टाकानि अचालयत्।
सः भाण्डे किञ्चित् लवणम् अपि अक्षिपत्।





मदनस्य भुट्टाकं चट्-चट्-ध्वनिं करोति स्म।
मदनः तत् परिवृत्य भर्जति स्म।
भुट्टाकं भर्जनानन्तरं धूसर-कृष्णवर्णम् अभवत्।
जमालः क्वथन्ति भुट्टाकानि चालयति स्म।





मदनः अपरं भुट्टाकं भर्जनाय स्थापितवान्।
सः स्वकीये प्रथमे भुट्टाके निम्बुकं लवणं च लेपितवान्।
जमालः अपि स्व-भुट्टाकानि भाण्डात् निष्कासितवान्।
सः स्व-भुट्टाकेषु उपस्करं लेपितवान्।





उभौ स्वकीयानि भुट्टाकानि आनीय आगतवन्तौ।
पितुः मित्रं भर्जितं भुट्टाकम् अखादत्।
तस्य पत्नी क्वथितं भुट्टाकम् खादितवती।
तौ जमाल-मदनयोः भुट्टाकानि भृशं प्रशंसितवन्तौ।

